# भारद्वाज शिक्षा

गणेशं प्रणिपत्याहं संदेहानां निवृत्तये
शीक्षामनुप्रवक्ष्यामि वेदानां मूलकारणम् १

-अ-

वृजने ज उदात्तश्चेदकारेण सहोच्यते
स्तुतं पदं तु वाक्यान्ते प्रचयं परिकीर्तितम् २

आ पञ्चमाद्धव्यपूर्वो घृतेनोर्ध्वश्च आहुतम्
वाक्यान्तोऽपि तथा प्रोक्तो यःपूर्वस्तु न विद्यते ३

-स्वरभक्तिः-

रादत् परशुरन्तोच्चे त्विङ्ग्यः पर्शुश्च भक्तिता
पर्षच्चेहातिपर्षापि स्वरभक्तेस्तु नित्यता ४

पापं विलोमपूर्वे चाकार्षं कार्षीत्तदादिषु
स्वरभक्तिं विजानीयान्नान्यवर्णोऽत्र संभवेत् ५

-आ-

अग्ने तान्नपते त्रींश्च त्रिष्टुभा चैवमाद् भवेत्

-इ-इय

क्षिप्रा भर्त्र्ययित्र्यरात्र्यमन्त्र्यपित्र्यापि काठके ६

समाने तु पदे ह्रस्वाः सहल्रा विरळाश्च ये

-इ-

जुष्टो वाचः प्रजाग्निंचि मानोमित्र उदस्त च ७

अग्निर्वाव च देवावै केशवापविधायकः
रक्षांसीत्यनुवाकेषु ह्यप्येतीकारवान् भवेत् ८

छन्दा या तेन बर्हिश्च इद्ध्या अग्ने बृहन्परे

यज्ञस्य पूर्व इष्टयै च त्विकारादिः प्रकीर्तितः ९

अकारिषं च णः पूर्वो रीरिषो रीरिषन्नपि
तारिषच्चारिषं चेत् स्यात् स्वरभक्तिर्न विद्यते १०

उपसर्गेषु पूर्वेषु त्वियुरित्यत्र विद्यते

–ई–

जुष्टःप्रश्नकाण्डाच्छिद्रारण्यके मानुषी सईत् ११

विनिष्पर्यसुरःपूर्वक्रीयेत्यत्र न ते परे
चातूरथस्यपूर्वान्यौ होत्री नप्त्री च दीर्घगौ १२

पोत्री नेष्ट्री स्वस्त्री स्तोत्री शतरुद्री न णांपरः
वरीयसी च पीयूषो दवीयोऽथ ह्रसीय च १३

चीयते च द्वितीयश्च तृतीयादौ तथैव च
पीयति त्वस्तृतीयश्चावृकास्ते ऊर्ध्वगामीयुः १४

–उ–

स्वरोत्तरपपूर्वे तु शषहोर्ध्वे तु मध्यगः
रेफादुकार एव स्यात् स्वरभक्तिर्न विद्यते १५

रादुत्वमरुषश्रुच्चेदरुहद्रुह चारुहम्
तिक्रुष्ट चक्रुषश्चक्रुः क्रुङ्ङमुत्ताद्धरोत्तरे १६

पहणामत ऊर्ध्वे च त्वभिमित्रकपूर्वके
द्रुषदं वै द्रु ध्रुवाध्रुङ नानादृत्य दृतिश्रुतिः १७

दृशेऽनादृत्य दृषदः उद्दृष्ट उद्धृतोद्धृतः
च वि मे नम आ देवः स्तुहीह हवनेत्यसिस् १८

वाजं वो वै सित स्वर्षिं तपो मे हृदये न च

गण् माच्योर्ध्व श्रुतः श्रुष्टी श्रुधी श्रुत् श्मश्रु शुश्रुवान् १९

द्वित्वं चाप्यृतवो यज्ञो र्वतः पूर्वं श्रितः सइत्
परिन्ययो वचोर्ध्वे च स्नुति शब्दश्च सस्नुषः २०

स्नुक् पदे स्नुह्युकारः स्यात्ससृवां स न विद्यते
षान्तः प्रुट् म्रुक्ति चोर्ध्वश्च वाग्ब्रू शुभ्रु च शत्रु च २१

भ्रुमिं भ्रुविग्रुमुष्टिश्च क्षामन्नुरुच वब्रु रुत्
शतमित्त्यान् च मामस्मान् पूर्वं नादुत्वमुच्यते २२

जुह्वत्यप्याहि जुह्वेऽन्त्यस्वारो गृह्णोपभोत्तरे
उकारवान् जुह्वशब्दः संधानं परतो न चेत् २३

देवानां त्वे क्रतुं चासौ यजमानेषु षात्तदुत्

-ऊ-

भूतेभ्यः प्रोक्षति तस्माद्भिर्भूर्देवायतः परे २४

-ऋ-

वृष्टयहृत ऋकारः स्याद् विवा यस्य ह ऋध्यते

-ऌ-

अक्षरान्तऌकारो यः स्वरो ज्ञेयो विचक्षणैः २५

उदाहृतः क्लृप्तशब्दे न पदाद्यन्तयोः स्वरः

-ए-

बद्धैने सा भवे मैद्य येन्त एकादशत्रयम् २६

ग्नीपूर्वतो जुषेतां च प्रथमोऽञ्जन्तिसत्ययोः

-ऐ-

येकेशिनः सऐकारो व्यैच्छन्नित्यत्र वर्णितः २७

प्रैयमेधा आसन् नैयग्रोधप्रैयंगवं तथा
दोहै यज्ञं च वैयाघ्रे दैयांपात्यैत्वगा इमे २८

ब्रह्मवर्प्रैन्द्रियं चेन्द्रि पशून्वीर्यमनुपरः
मुखतो ज्योतिरूर्जाय एवास्मै चैवमैद भवेत् २९

त्रीन् ब्रह्म व्यग्नि चेन्द्राग्नी मेदसैश्च पुरोहविः
-औ-
एनौ विवा इन्द्रस्यायुरादावन्तेऽग्नयेऽन्नवत् ३०

स्फ्येन यां परि घर्मापनुत्त्यै तेषां पराणुत्त्यै
-क-प-
इत उत्तरं ककारादिप्रथमान् वक्ष्यामः
अन्तःस्थाभ्यः पवर्गाच्च स्वरेभ्यः पूर्वतः स्थितौ ३१

त्रिष्टुक्शब्दस्तथानुष्टुक् ककारान्तावितीरितौ
अन्यत्र तु पकारान्तावेताविति विनिश्चितौ ३२

प्राणानामिति च ग्रैष्मी पदयोः परभूतयोः
पूर्वस्य तु बिधेस्तत्र वैपरीत्यमिति स्थितिः ३३

चक्षे सू श्रद्धऊर्ध्वे क उत्करोऽन्तोच्च एव कः
-कृ-गृ-
विष्टुतं कृष्टशब्दश्च पच्च्योर्ध्वः षात् परस्तु टः ३४

त्वष्ट्रे वस्वग्नये प्रातर्मत्या अष्टाकपालमत्
वैश्वानरश्च जुष्टोऽम्बे शं नोऽग्निर्नश्च तारिषत् ३५

परापात्वेभ्यएवैनत् ब्रह्माद्येकाप एव तः
विदुषो हविषा चैनत् वेदत्पशुर्ऋतव्यतः ३६

-स्तृ-स्पृ-स्मृ-

थमेनात्मानं स्पृणुत स्पृणोति स्पृत सांहितः
प्राणानां स्पृत्यै द्वावेव लोकस्पृते ब्रह्मस्पृतम् ३७

-घा-खा-

सघा चतुर्थो नोदेऽसि सध्यासं लान्यमेघ च
रघानघाभ्य आघाघ प्रघातश्चैव मोघ च ३८

क्रियाशब्दश्च यत्रैव तदन्यो घन जङ्घ च
पुनस्तुवी प्रतूर्तिश्च त्वावतश्च बृहत्कृधि ३९

स्यन्दता ये वलं विघ्न च नो वसु सुरेतसम्
पूर्वो मघः पितृशब्दः परो वा मघवश्रुतिः ४०

-ग-घ-

त्रीणि प्राणादि विश्वान्यो जिघाँसन् यो जघन्थ च
टवर्गेऽपि चतुर्थत्वं वोढवेत्यादिरुच्यते ४१

-थ-ध-

यदक्रन्दश्च दीध्यानो भिर्वस्तेधस्तु चर्तुधा

-द-ध-

ब्रह्मन्पञ्चान्त्यमेधाश्च तनूवर्चपयोर्ध्वगः ४२

-देहि-

उपायज्ञो येत ईशा जी सी सू दह्नि मेपरः
परि स्यनः पुन र्देहिवेद्यूर्ध्वे च चतुर्थकः ४३

-ददातु-दधातु-

यस्य स्वाहा परः चेद्वा कर्मण्यं श्रवणो वरम्
नयास्माकं यमो मे नो धाता वेदो मनस्ततः ४४

इन्द्रः पूर्वो ददात्वन्यः सुकृताद्युत्तरे च धः

-ददाति-दत्ते-

तेनायुरेषां रूपाणां त्रयस्त्रिंशत्तथैव च ४५

शमसप्रचनोर्ध्वश्च कामेनान्नात्परोऽपि च
चतुर्थ्यन्तपरोऽपि स्यादाभ्यो येऽध्वर्यवेऽपि च    ४६

अग्नीधे ब्रह्मणे होत्रे चैनत् बर्हिषि दक्षिणाम्
तार्प्यं हिरण्यं वै धेनुमात्मना यश्चपूर्वकः    ४७

ददातीति तृतीयत्वं तदन्यत्र च संपिबत्
या मानोभ्रिं रुचन्नीं शूना मन्नाद्यं रभि स्वयम्    ४८

यं सू द्वि चि न्द्रियं दत्ते धेयमात्मन्न धो

-धकारः-

ब्रूह्यवसः तुरीयं थं जहि ओहैः विद्धु सप्रथाः

शोचिरमुत्र भूयात् भूः शृण्वै रश्मिरनागसः
देवं भूयिष्ठभाजश्च सहध्यै पूर्वतस्त्वथ

वमदाबसशत्राश्च सस्वरा गोकुरो अयः
स्वरपूर्वा अमीत्वाद्या अकाराद्याश्च तत्रधः

-धकारः-

रधामद्रधसी गाधं क्लृधानधः षतोरधम्
क्षुधद्योधुस्पृधोनाधै मागधं विवधादध

वावृध वैमृध व्याध युधश्चुद्धीवृधादधुः
रुधश्चुदृणधन्नद्धो नाधमान रराध च    ४९

गवीधुकस्त्रिध ग्रोधमिदधञ्जनधाः षध
पदान्ते च धिकारोऽपि राधश्चुदवधिष्मच    ५०

अधोनिष्ट्या वि घोषवद्युक्तः पदादिगस्त्वपि
अश्वाभिधानीमिषुधे त्वबाधन्त विबाध च    ५१

कायाधवश्च निध च निर्बाधाबधिरोपि च
असाधयत गौधूमं गावीधुकमिति स्थितिः ५२

नाकारान्तवृथाद्युच्चा अथोऽर्थं तीर्थ पार्थ च
वीथोऽभागोर्थशब्दस्तु रूथ्यो निर्ऋथ एव च ५३

जगन्थ घन्थ ततन्थ दाधर्थ मो ववर्थ च
मेथीं मथित थायन्ति राथीतरो विमाथ च ५४

वेत्थावृथं चावृथाश्च जहर्थास्थ्ना तथैव च
अन्तोच्चकाविथेत्थौ च विसर्गान्तौ न चेच्छिथि ५५

मेथिष्टा विथुरक्राथ प्रोथाथर्व मिथः क्वथन्
ग्रमात्थ्नश्च विदथ्यं च कतियूरूपपूर्वकः ५६

शृं पं ग्रं मं च मां पूर्वः समाने तु चतुर्थ च
मथ्यमानो रथ्यस्वारः पृथ्वी राथन्तरोऽपि च ५७

–भ–

फल फेन फणत् फर्व्य शफेभ्योऽन्यो भ उच्यते
वैशंभल्या च शीभादौ पवर्गे च चतुर्थगः ५८

–ङ–

अवाङिति ङकारान्तं नाभिमूर्ध्वं च सर्वदा

–ञ–

याच्ञैव च ञकारान्तमुपज्ञु च तथैव च ५९

–ज्ञ–ग्न–

कस्मा उप य रा जाच्च ने नवर्णात्परौ च ये
तपूर्वौ तपरौ स्यातां जञावन्यौ गनौ स्मृतौ ६०

भूयांस उनन्तशब्दोच्चशंस्तासूर्ध्वोहोऽतंसयत्
उन्नवंशं स्त्रीषसादं सावन्यो मुखोच्चकः ६१

आताँसीच्छँसिने शँसन्नासिक्यो दुषदँ सदः
शब्दैक्ये रषपूर्वो णो व्यवेतो स्पृषतेः क्वचित् ६२

चर्मण् चर्षण् वृषण् शीर्षण् ब्रह्मणाक्षणावग्रहे
वाणश्शताणवश्चापि मेण्यादौ प्राकृतश्च णः ६३

बस्तपूर्वपरो वृष्णि वृष्णा वृष्णश्च वृष्णियम्
रुन्धे हुकः पूर्वाद्यज्ञो विष्णुः कृष्णः क्रमोदितौ ६४

-रुन्धते-दधते-

अन्तोऽनन्त्यं न वै इन्द्रस्तस्याप्रति न मध्यगम्
तार्प्यं च रुन्धते त्वेषु दधते स्यात्परत्र तु ६५

एकैकस्त्रिवृदाग्नेयं विश्वा युञ्जन्ति चाग्नये
त्वं ह्यप वै न देवोर्ध्वे इन्द्रश्चत् पुर आदितः ६६

नवान्ये दधते विद्वाँसः साध्याः षड्तवो वै
पृथिव्यै जाजायन्तेन्य एष्वतिष्ठन्त इत्यपि ६७

कुसुरुबिन्दोऽप्रतिष्ठां च उत्क्रा प्रजापतिर्नव
आयुर्वा अन्त आदित्यं प्रजाग्निं तं प्र संततिः ६८

धिष्ण्याद्वितीयं च साकं देवस्य स्फ्यं तु बार्ह च
ब्रह्म द्वितीयतृतीये पुरुषं प्रतिपूरुषम् ६९

देवा मिथो देवस्याहं च्यवन्ते चैषु तद्विधिः
वाग्वा इन्द्रस्त्रिवृद्बर्हिर्नः प्रतिष्ठापयन्ति च ७०

विवा एता वप्रतिष्ठां तार्प्यं तृतीयतुर्ययोः
संततिर्यस्य युञ्जन्ति तार्प्येणासुर्यमन्तगम् ७१

प्रजापतिः शुक्रमादियत्पशुः समर्धयन्ति नः

-न-ङ-

साव्यूर्ध्वं त्र्यहा भवन्ति न प्रत्यङ् पृष्ठ्य आपृथि ७२

आलभन्त

आद्या वैन्द्रमुत्ताग्नेयीं तयास्मिन्नप्रथत्परे
पूर्वो मेधा यालभन्त ह्यादन्तोऽस्ना भवेच्च नः ७३

भविष्यन्ति

ते भविष्यन्ति देवासुस्तेभ्यः षड्वा परश्च च्छन्

गच्छन्ति

इन्द्रोऽगच्छदगच्छन्त्यसौ देवानां नेन्द्रियं तु छन् ७४

एवैतान्

देवस्य रश सावित्रं मेध्यानेवैना उच्यते
देवानाग्रउ पूर्वं तु समीच्येनान्निरन्तरम् ७५

-न-निरवपन्-

स्यात्ते तास्तान्यथोनत्वं बहुश्रुति दधत्यपि
संवत्सरो द्वि साध्यर्तव आदित्याद्वे यथाजान् ७६

-इयाव-अयाम-

सुवरयाम चादित्याः प्रजापत्याङ्गिरोऽपि चेत्

-हिरण्मय-हिरण्यय-

भूत्वा पुरुष दामापि द्यावा शकुनि संश्रितम् ७७
तेन ब्रह्मान्तरेणोर्ध्वो हिरण्मयोऽत्र संस्मृतः

-समन-सवन-

पारावगत्य बहूनामिवोर्ध्वः समनेऽपि मः ७८

-एवैनाम्-वै त्रिश्च-

वारुणोऽन्ते द्विरेवैनां इमेऽवन्ति च सप्तभिः
यजुषाग्नेः पुनः सृष्टीश्चैनां ब्रह्मा तु दीर्घतः ७९

-प्रथमजामृतस्य-

पीवोन्नां प्रथमं चैव हरिं प्रथमजां च मः

-वृद्धामिन्द्रः -
अग्नये नासो धात्रादि प्रजां वृद्धां च सर्वतः ८०
-स्यामिति-स्यादिति-
यामिति मुनिकाण्डे चाप्यर्धुकं स्याद्विसर्जयेत्
-यकारः-
ऐत्वं हित्वा ष्यतोर्ध्वश्चेत् अइमध्ये य एकतः ८१

निवृश्चत वृश्चतश्च अन्यो वृश्चयत तेपरः
-ऋत्वियः-
योनिः पुण्यो हवै योनिं तस्माद्गर्भो यजै महै ८२

महो य एष स्य हिस्थ पूर्व ऋत्विय एव यः
-यविष्ठ्य-
यदग्ने तु यविष्ठ्यात्र सकारोर्ध्वो न होतयुक् ८३
-मर्त्यास-
उषसं चामृतं पूर्वे मर्त्यासोऽत्र य उच्यते
आकारान्तोरयिष्ठा च अस्तभ्नाद्द्यांदसंयुतम् ८४
-वि-राज्ये-व-
विराज्येप्रत्यसद्देवा संवत्सर्तुविवै परः
मर्तेष्वयोग्निरूर्ध्वे तु पूर्वश्चाद्युच्चमिङ्ग्यगम् ८५

अन्तोदात्त सुवर्गश्च लोकशब्दपरेऽपि वा
-र-
वीर्यस्य नस्य चानात्यै राध्नुवन्त्यप्यरेफता ८६
-अनुनासिकः-
युक्तोत्तमाच्च पूर्वं तु शब्दैक्ये नानुनासिकः
अनुदन्त-अनुदत
मनोजयदु यत्पञ्च त्रयस्त्रिंशत् परोऽनुदत् ८७

-र-

आद्युदात्ते तथेङ्ग्यस्थे द्वित्वं वात्र ग्रहे गरौ
-ग्रहीष्यते-गृहपतिः-
तव्याःष्योर्ध्वेऽप्यृकारान्ते न मेधपतिसोत्तरे ८८

एवैनं च पतिं साक्षात्ताभिरन्तं मुखं तथा
ऋतेन मुखतः पूर्वो र स्यादारभतेऽन्वपि ८९

अगौः पूर्वे तु यज्ञं चान्वात्मानं वत्सरं तथा
यज्ञेनोर्ध्वो गृहीत्वा स्वात्तोर्ध्व आरभ्य रेफगः ९०

नरन् रभेत्वनारब्धोऽस्य प्रक्ष्यः प्रवतापि च
पशुमादित्रयं प्रज्ञो देवा होत्रा च रोऽसमः ९१

अतप्यतपरः सोमश्चाद्याः पञ्च रुरायतरः
सूर्यादित्यपयोधाता दूरादपि च सौर्यरः ९२

एक मैत्र जुहोत्यूर्ध्वो नाङ्घ्र्यूर्ध्वो जरितार च
-ल-
नासिक्यलत्वमध्ये वोऽन्यंव्लीनासंव्लियाय च ९३
-व-
दीर्घ प्रजावतीर्वश्च नद्यैकावं ग्रहावहै
त्रिसप्तग्राम्याः पशवो वस्व्यथैकात्रिवृत्परः ९४

स्वे भवेद्यतने धेये स्तोमे योनावृतौपरः
स्वया देवतयेत्यत्र ह्यैकारान्तः प्रकीर्तितः ९५
-ष-
कषचाषजषाशब्दाः चषाल्ममाषवाचकः
षाट् चानवर्ण पूर्वः षण् नदकोर्ध्वो यथा मषम् ९६

-स-

सख्या श्रेष्ठः पदे स स्यादिध्यसेऽत्र स उच्यते
योऽसौ चतुःससर्वेषां यद्यश्वा समर्धयत्    ९७

-विसर्गः-

वीते एव च ते ग्रीतौ अमीसामेव सेत्यपि
सत्रं केनवैपर्यन्तं एकसंख्याद्वयात्रयुक्    ९८

-उपाधत्त-उपादधत-

छन्दो देवा सुरास्तेन पूर्वं वृष्टिसनीः पशुः
यथाधत्त तृतीयान्ता यथावै मान्त वान्त च    ९९

-नो भ्रातृव्यस्य वृङ्क्ते-आत्मन्-

यत्पत्न्यादीन्द्र इष्टर्गो यजुषा छन्द इत्यपि
नो भ्रातृव्यस्य वृङ्क्ते स्यादात्मन् यज्ञस्य सं पच    १००

-आत्मन्-

देवासुराब्रुवन्नादौ तथा दधत कीर्तितम्

-कुरुते-

सर्वा वयो वै ज्योतिष्मः कुरुते देवकद्रविण्    १०१

-पतिः पशून्-

तेऽस्मात् सृष्टाश्च नर्चैनान् पशून्परः पतिः पशून्
यावैतन्मेदपूर्वेद्युर्यज्ञं च मनसातनु    १०२

-अग्निमसृजत-

तं सृप्र सोऽबिभेत्सोऽस्मात् सोऽश्वोऽग्निमसृजापि च

-अचिनुत-अचिकीषत-

यशसर्तुत्तुरचिनुत पृथिव्यग्न्यचिकीषत    १०३

अनुजावरं परं चैन्द्रं राजानं सोममेव च
सा सृष्टाश्वविराजं च सोऽग्निं च पुरुषं तथा    १०४

स इन्द्रं तत्परो देवा सुरानिति च कीर्तितम्

सोऽस्मात्तं सृष्टमित्यस्मिन्नश्वमेधं परे तथा    १०५
अग्निहोत्रं परे यज्ञान् देवान्ते पाप्मना परः
-प्राण व्यान-अपान-
विश्वकर्मात ऊर्ध्वं तु व्यानं मध्यं परोंऽशुना    १०६

न कस्त्वा वाक्यवद्ग्रन्थे न स्वाहोर्ध्वैकवाक्यके
प्रजा त्रिवृद् वसीयान् स्यात् पूर्वं तु स्वयमुत्तरा    १०७

प्रदशहोतारं तेन द्वादशासुरपूर्वकम्
-अमु-इम-
प्रान्यामुंपूर्वमम्भांसि सविता द्वयमध्यगम्    १०८

अग्निद्वितीयतृतीये देवाश्चैवं परद्वयम्
यावती प्रथमे तुर्ये यदेकेनादिगत्रयम्    १०९

भूमिरादिद्वयं चास्मिंश्चामुष्मिँश्चेति सर्वतः
अन्त्यं तु ज्योतिरापो वा इमे वा एत एव च    ११०

प्रजापती रक्षांस्येव प्रजापतिर्नवैषु च
आदौ नयति वित्तान्ववाणुशःशोयुनक्त्यमन्    १११

दर्भास्यास्माद्विशानीममब्राह्मण इति त्वतः
-द्वितीयपक्षे-शब्दाः-
द्विरुद्वयस्यपस्याश्च सदृशत्रयमध्यगः    ११२

द्वितीय ससृवांसोऽवधत्तामुत्तमं जुहुयात्
वेत्वाहाहंत्रिस्ते नन्दा आह्वयता च दिश्यवि    ११३

उत्तमए इकारान्ता रेफाच्च वर्णतः क्रमात्

उत्तमवर्णपदानि

व्युत्क्रमावस्तवान्या यत्सुभगा ददतु प्रियम्   ११४

घृतभूतकृतावोच्च पृथिवीत्वारदब्रुवन्
रात्र्यस्यत्यत्यहश्चन्द्र वा योनिर्नवैष्यथः   ११५

एतेनोक्तं न्यदाग्नेयः पशवोनो विचारथ
प्राणममृत आदित्यः सतनूपसृपानुवि   ११६

तस्मा एत मवाचस्त्वा सजाता ह्याय चातिथिः
जुषन्तां पुष्कलेभिश्च स्यातां जीवांश्च तेजसा   ११७

तेदद्यन्तपुरोडाशं दिशोऽस्माकं च दुष्करम्
विष्णोष्टभ्नाच्च दाधर्थ निर्घ्नन्ति यामि चेमि चेत्   ११८

मये हनिधिना चोग्रमन्यस्तिग्मं च मष्मषा
पिप्रतोथो अधियीत परिदत्तादमं फला   ११९

द्विविषाद्यपिधानं च रोहोर्ध्वो यजमान अत्
दिशोऽस्माकं स्तवानि यत् सुभगा धूर्ददत्वपि
घृतभूतकृतावोच्चैः पृथिव्यै त्वारदब्रुवन्

रात्रियास्यत्यहश्चन्द्रा वा योनिर्न उपैष्यथ
तस्मा एतमवाचस्त्वा सजाता ह्याय चातिथिः

एते तस्यान्यदाग्नेयः पशवो न तथा विचि
अधरामृत आदित्यसतनूपसृष्ठानुवि

जुषन्तां पुष्कलेभ्येजज्ञीवानस्माकं मामित
मयेह निधनोग्रमन्यस्तिग्मेन च मष्मषा

विष्णोऽष्टभ्नाच्च दाधर्थ निर्घ्नन्ति यामि चेमि च
ते दद्मन्त पुरोडाशं पिधानमसि दुष्करम्

पिप्रतोऽथोऽप्यधीयीत परिदत्तादिदं फला
तेजसास्मै च संयन्तु अविग्राहं च विष्यताम्

परस्तादविषादी च अणुभिर्भासि रोह च
आसादयेदासवित्रे सशीर्ष्णा ह्याशिषोऽम च

-उत्तमपक्षे-

एवेति ह विसर्गौ च मध्ये चान्तेवयोऽप्युशन्   १२०

देवा इन्द्रिय इदं वा इन्द्रोवृत्रा प्रकेतुना
या वां च पावमानोऽयं वावतृतीय इत्यपि   १२१

द्वितीये तु प्रदेवं हि देवीः प्राचीन् चैव चेत्
समिद्धो अग्निः संक्रूरं सुवर्दाक्षि च नान्यतः   १२२

वैपरीत्यं वषट्कारः परा वैश्वानरोऽग्नये
देवस्याहं च सर्वाणि वयोघ्नन्ति नवापरः   १२३

एकादशाग्निष्टोमं च ब्रह्मकिं चैषवै विभूः
वास्तोरिन्द्रं चोपहूतं पूर्वं होताग्निमेव च   १२४

प्रजापतेस्त्रयं सत्यं देवसवितर्यज्ञ एव च

-विसर्गः-

ऋध्यते नीत आहुर्यो विश्व तद्धि सुवर्ग च   १२५

चैनास्तास्वति छन्दांसि त्वपां नान्त्यं पशुष्वपि   १२६

देविका एतएवेति संपैवैनास्तु माध्रुवा
आत्पूर्व समिधः श्रोत्रं दाविधृति र्वसिष्ठ तैः   १२७

त्वं सोन्ते तव मय्येषा त्वं सर्वः च ध्रुवोऽसि प्रिः
यत्स्थले यादृशः शब्दः तादृशः परिकीर्तितः    १२८

विभक्तिलिङ्गरूपैश्च वर्णा ज्ञेया विचक्षणैः
क्रम इंग्यः च कण्ठोक्ति यजुरादि पदद्वयम्    १२९

पदसांख्यं वर्णसांख्यमवधानाष्टकं बुधैः
यो जानाति भरद्वाजशिक्षामर्थसमन्विताम्    १३०

स ब्रह्मलोकमाप्नोति गृहमेधी गृहं यथा
इति भारद्वाजशिक्षा समाप्ता